# स्वराङ्कुशशिक्षा

हेरम्बं चण्डिकां ध्यात्वा शम्भुं सूर्य्यं हरिं गुरुम्
सरस्वतीं कविवरां वक्ष्येऽहं स्वरनिर्णयम्  १
उदात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत्
उदात्तात्स्वरितात्पूर्वो नान्यमापद्यते स्वरम्  २
व्यञ्जनैस्तु यवौ यत्र प्रयुज्येते ततः परम्
अपूर्वो नीचपूर्वो वा जात्यः स्वारः स उच्यते  ३
एदोतोरुच्चयोर्यत्र नीचोऽकारः परो यदि
एकीभावे भवेत्तत्र स्वरोऽभिनिहितस्तदा  ४
इउस्थाने यवौ यत्र जायेते उच्चयोस्तयोः
ताभ्यामुत्तरतः स्वारः क्षैप्र इत्यभिधीयते  ५
इकार उच्चः पूर्वस्मिन्परस्मिन्नियतः स च
प्रश्लिष्टमाहुराचार्याः स्वरवर्णविदस्तदा  ६
कम्पन्ते ते च चत्वारः स्वरितोच्चोदयाः स्वराः
एतत्सम्यक्प्रकारेण ज्ञात्वाऽसौ कम्पविद्भवेत्  ७
उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत्
एष सर्वबहुः स्वारस्तैरोव्यञ्जन एव च  ८
अवग्रहात्परं यत्र स्वरितस्स्यादनन्तरः
तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः  ९
स्वरे चेत्स्वरितं यत्र विवृत्या तत्र संयुतम्
एतत्तु पादवृत्तस्य लक्षणं शास्त्रनिश्चितम्  १०
जात्यः स्वारः स जात्येन श्रुष्ट्यग्ने क्षैप्र उच्यते
तेऽवर्द्धन्ताऽभिनिहितः प्रश्लिष्टो हीन्द्र गिर्वणः  ११
तैरोविरामो विष्कभिते तैरोव्यञ्जन ऊतये
पादवृत्तस्य त्वेतद्धि क ईं वेद निदर्शनम्  १२
नीचेन स्वरितः स्वारमेकीभावेऽनुगच्छति
नीचं नीचस्त्रिभिश्चोच्च उच्चत्वमभिगच्छति  १३

उदात्तात्स्वरिताद्यस्य स्वरितोदात्तवच्छ्रुतिः
प्रकृत्या निहितं चाहुराचार्याः स्वरवित्तमाः १४
यत्राभिनिहितात्पूर्वो ह्युदात्तो दृश्यते यदि
तत्र स्वारं न कुर्वीत रथानां नेति दर्शनम् १५
स्वरात्परं व्यञ्जनं यत्परं चेदनुनासिकः
पूर्वस्य स्वरते नादो न पूर्वः स्वरते स्वरः १६
यत्र स्वरात्परो नादः पूर्वः स्वरितभाक्स्वरः
तत्राक्षेपो न कर्तव्यो नादे चाङ्गे च तत्परे १७
स्वरितस्यानुरूपेण कम्पं कुर्वीत शास्त्रवित्
ह्रस्वे ह्रस्वं विजानीयाद्दीर्घे दीर्घं तथैव च १८
स्वरितान्नियतं गच्छेत्स्वरितो नियतश्च तौ
द्विमात्रौ यत्र दृश्येते ह्रस्वकम्पः स उच्यते १९
जात्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च
एते स्वराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः २०
अनुदात्तं क्रमात्कुर्यात्स्वरितं ह्यवलम्बयेत्
पुनर्नियतमागच्छेद्दीर्घकम्पः स उच्यते २१
जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः
स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये २२

इति श्री जयन्तस्वामिप्रोक्ता स्वराङ्कुशा शिक्षा समाप्ता